श्रीमन्महर्षिव्यासप्रणीतं

# शारीरकमीमांसादर्शनम् ।

( ब्रह्मसूत्राणि )



प्रकाशक—

चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।

मूल्य )।।। तीन पैसा ।

ॐ

॥ श्रीगुरुभ्यो नमः ॥

# शारीरकमीमांसादर्शनम्

## [ ब्रह्मसूत्राणि ]

---

## अथ प्रथमोऽध्यायः

### प्रथमः पादः

१ जिज्ञासाधिकरणम् । सू० १ ।

**अथातो ब्रह्मजिज्ञासा ॥ १ ॥**

२ जन्माद्यधिकरणम् । सू० २ ।

**जन्माद्यस्य यतः ॥ २ ॥**

३ शास्त्रयोनित्वाधिकरणम् । सू० ३ ।

**शास्त्रयोनित्वात् ॥ ३ ॥**

४ समन्वयाधिकरणम् । सू० ४ ।

**तत्तु समन्वयात् ॥ ४ ॥**

५ ईक्षत्यधिकरणम् । सू० ५–११ ।

**ईक्षतेर्नाशब्दम् ॥ ५ ॥**

**गौणश्चेन्नात्मशब्दात् ॥ ६ ॥**



तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥
हेयत्वावचनाच्च ॥ ८ ॥
स्वाप्ययात् ॥ ९ ॥
गतिसामान्यात् ॥ १० ॥
श्रुतत्वाच्च ॥ ११ ॥

६ आनन्दमयाधिकरणम् । सू० १२–१९ ।

आनन्दमयोऽभ्यासात् ॥ १२ ॥
विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥
तद्धेतुव्यपदेशाच्च ॥ १४ ॥
मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥
नेतरोऽनुपपत्तेः ॥ १६ ॥
भेदव्यपदेशाच्च ॥ १७ ॥
कामाच्च नानुमानापेक्षा ॥ १८ ॥
अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

७ अन्तरधिकरणम् । सू० २०–२१ ।

अन्तस्तद्धर्मोपदेशात् ॥ २० ॥
भेदव्यपदेशाच्चान्यः ॥ २१ ॥

८ आकाशाधिकरणम् । सू० २२ ।

आकाशस्तल्लिङ्गात् ॥ २२ ॥

९ प्राणाधिकरणम् । सू० २३ ।

अत एव प्राणः ॥ २३ ॥

१० ज्योतिश्चरणाधिकरणम् । सू० २४-२७ ।

ज्योतिश्चरणाभिधानात् ॥ २४ ॥

छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पण-निगदात्तथा हि दर्शनम् ॥ २५ ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यवि-रोधात् ॥ २७ ॥

११ प्रतर्दनाधिकरणम् । सू० २८-३१ ।

प्राणस्तथानुगमात् ॥ २८ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्ब-न्धभूमा ह्यस्मिन् ॥ २९ ॥

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैवि-ध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

इति वैयासिक्यां शारीरकमीमांसायां प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

अथ द्वितीयः पादः

१ सर्वत्र प्रसिद्ध्यधिकरणम् । सू० १-८ ।

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥
विवक्षितगुणोपपत्तेश्च ॥ २ ॥
अनुपपत्तेस्तु न शारीरः ॥ ३ ॥
कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥
शब्दविशेषात् ॥ ५ ॥
स्मृतेश्च ॥ ६ ॥
अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥
सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

२ अत्त्राधिकरणम् । सू० ९-१० ।

अत्ता चराचरग्रहणात् ॥ ९ ॥
प्रकरणाच्च ॥ १० ॥

३ गुहाप्रविष्टाधिकरणम् । सू० ११-१२ ।

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥
विशेषणाच्च ॥ १२ ॥

४ अन्तरधिकरणम् । सू० १३-१७ ।

अन्तर उपपत्तेः ॥ १३ ॥
स्थानादिव्यपदेशाच्च ॥ १४ ॥
सुखविशिष्टाभिधानादेव च ॥ १५ ॥
श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

५ अन्तर्याम्यधिकरणम् । सू० १८–२० ।

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

६ अदृश्यत्वाधिकरणम् । सू० २१–२३ ।

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

रूपोपन्यासाच्च ॥ २३ ॥

७ वैश्वानराधिकरणम् । सू० २४–३२ ।

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

अत एव न देवता भूतं च ॥ २७ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥

सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥३१॥
आमनन्ति चैनमस्मिन् ॥ ३२ ॥
इति वैयासिक्यां शारीरकमीमांसायां प्रथमाध्यायस्य
द्वितीयः पादः ॥ २ ॥

---

## अथ तृतीयः पादः

१ द्युभ्वाद्यधिकरणम् । सू० १–७ ।

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥
मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥
नानुमानमतच्छब्दात् ॥ ३ ॥
प्राणभृच्च ॥ ४ ॥
भेदव्यपदेशात् ॥ ५ ॥
प्रकरणात् ॥ ६ ॥
स्थित्यदनाभ्यां च ॥ ७ ॥

२ भूमाधिकरणम् । सू० ८–९ ।

भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥
धर्मोपपत्तेश्च ॥ ९ ॥

३ अक्षराधिकरणम् । सू० १०–१२ ।

अक्षरमम्बरान्तधृतेः ॥ १० ॥
सा च प्रशासनात् ॥ ११ ॥
अन्यभावव्यावृत्तेश्च ॥ १२ ॥

४ ईक्षतिकर्मव्यपदेशाधिकरणम् । सू० १३ ।

ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

५ दहराधिकरणम् । सू० १४-२१ ।

दहर उत्तरेभ्यः ॥ १४ ॥

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥१५॥

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१६॥

प्रसिद्धेश्च ॥ १७ ॥

इतरपरामर्शात्स इति चेन्नासम्भवात् ॥१८॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

अन्यार्थश्च परामर्शः ॥ २० ॥

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

६ अनुकृत्यधिकरणम् । सू० २२-२३ ।

अनुकृतेस्तस्य च ॥ २२ ॥

अपि च स्मर्यते ॥ २३ ॥

७ प्रमिताधिकरणम् । सू० २४-२५ ।

शब्दादेव प्रमितः ॥ २४ ॥

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥२५॥

८ देवताधिकरणम् । सू० २६-३३ ।

तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥
शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥
अत एव च नित्यत्वम् ॥ २९ ॥
समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥
मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥
ज्योतिषि भावाच्च ॥ ३२ ॥
भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

९ अपशूद्राधिकरणम् । सू० ३४–३८ ।

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥
क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥
संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥
तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥
श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

१० कम्पनाधिकरणम् । सू० ३९ ।

कम्पनात् ॥ ३९ ॥

११ ज्योतिरधिकरणम् । सू० ४० ।

ज्योतिर्दर्शनात् ॥ ४० ॥

१२ अर्थान्तरत्वादिव्यपदेशाधिकरणम् । सू० ४१ ।

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

१३ सुषुप्त्युत्क्रान्त्यधिकरणम् । सू० ४२–४३ ।

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

पत्यादिशब्देभ्यः ॥ ४३ ॥

इति वैयासिक्यां शारीरकमीमांसायां प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥



## अथ चतुर्थः पादः

१ आनुमानिकाधिकरणम् । सू० १–७ ।

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

तदधीनत्वादर्थवत् ॥ ३ ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

महद्वच्च ॥ ७ ॥

२ चमसाधिकरणम् । सू० ८–१० ।

चमसवदविशेषात् ॥ ८ ॥

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥९॥

कल्पनोपदेशाच्च मध्वादिवदविरोधः॥१०॥

३ संख्योपसङ्ग्रहाधिकरणम् । सू० ११–१३ ।

न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

प्राणादयो वाक्यशेषात् ॥ १२ ॥

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

४ कारणत्वाधिकरणम् । सू० १४–१५ ।

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

समाकर्षात् ॥ १५ ॥

५ बालाक्यधिकरणम् । सू० १६–१८ ।

जगद्वाचित्वात् ॥ १६ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

६ वाक्यान्वयाधिकरणम् । सू० १९–२२ ।

वाक्यान्वयात् ॥ १९ ॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥
उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥२१॥
अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

७ प्रकृत्यधिकरणम् । सू० २३–२७ ।

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥२३॥
अभिध्योपदेशाच्च ॥ २४ ॥
साक्षाच्चोभयाम्नानात् ॥ २५ ॥
आत्मकृतेः परिणामात् ॥ २६ ॥
योनिश्च हि गीयते ॥ २७ ॥

८ सर्वव्याख्यानाधिकरणम् । सू० २८ ।

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

इति वैयासिक्यां शारीरकमीमांसायां प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तः प्रथमोऽध्यायश्च ।



# अथ द्वितीयोऽध्यायः

## प्रथमः पादः

१ स्मृत्यधिकरणम् । सू० १–२ ।

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

इतरेषां चानुपलब्धेः ॥ २ ॥

२ योगप्रत्युक्त्यधिकरणम् । सू० ३ ।

एतेन योगः प्रत्युक्तः ॥ ३ ॥

३ विलक्षणत्वाधिकरणम् । सू० ४–११ ।

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥४॥

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

दृश्यते तु ॥ ६ ॥

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

न तु दृष्टान्तभावात् ॥ ९ ॥

स्वपक्षदोषाच्च ॥ १० ॥

तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥

४ शिष्टापरिग्रहाधिकरणम् । सू० १२ ।

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१२॥

५ भोक्त्रापत्त्यधिकरणम् । सू० १३ ।

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥१३॥

६ आरम्भणाधिकरणम् । सू० १४–२० ।

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

भावे चोपलब्धेः ॥ १५ ॥

सत्त्वाच्चावरस्य ॥ १६ ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

युक्तेश्शब्दान्तराच्च ॥ १८ ॥

पटवच्च ॥ १९ ॥

यथा च प्राणादि ॥ २० ॥

७ इतरव्यपदेशाधिकरणम् । सू० २१–२३ ।

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २१

अधिकं तु भेदनिर्देशात् ॥ २२ ॥

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

८ उपसंहारदर्शनाधिकरणम् । सू० २४–२५ ।

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२४॥

देवादिवदपि लोके ॥ २५ ॥

९ कृत्स्नप्रसक्त्यधिकरणम् । सू० २६–२९ ।

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२६॥

श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

स्वपक्षदोषाच्च ॥ २९ ॥

१० सर्वोपेताधिकरणम् । सू० ३०–३१ ।

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

११ प्रयोजनवत्त्वाधिकरणम् । सू० ३२–३३ ।

न प्रयोजनवत्त्वात् ॥ ३२ ॥

लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

१२ वैषम्यनैर्घृण्याधिकरणम् । सू० ३४–३६ ।

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

न कर्माविभागादिति चेन्नानादित्वात् ॥३५॥

उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

१३ सर्वधर्मोपपत्त्यधिकरणम् । सू० ३७ ।

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥



## अथ द्वितीयः पादः

१ रचनाऽनुपपत्त्यधिकरणम् । १-१० ।

रचनाऽनुपपत्तेश्च नानुमानम् ॥ १ ॥

प्रवृत्तेश्च ॥ २ ॥

पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

पुरुषाश्मवदिति चेत्तथाऽपि ॥ ७ ॥

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

अन्यथाऽनुमिता च ज्ञशक्तिवियोगात् ॥९॥

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

२ महद्दीर्घाधिकरणम् । सू० ११ ।

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

३ परमाणुजगदकारणत्वाधिकरणम् । १२-१७ ।

उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः १३

नित्यमेव च भावात् ॥ १४ ॥

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

उभयथा च दोषात् ॥ १६ ॥

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

४ समुदायाधिकरणम् । सू० १८–२७ ।

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

उभयथा च दोषात् ॥ २३ ॥

आकाशे चाविशेषात् ॥ २४ ॥

अनुस्मृतेश्च ॥ २५ ॥

नासतोऽदृष्टत्वात् ॥ २६ ॥

उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

५ अभावाधिकरणम् । सू० २८–३२ ।

नाभाव उपलब्धेः ॥ २८ ॥

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

न भावोऽनुपलब्धेः ॥ ३० ॥

क्षणिकत्वाच्च ॥ ३१ ॥

सर्वथाऽनुपपत्तेश्च ॥ ३२ ॥

६ एकस्मिन्नसम्भवाधिकरणम् । सू० ३३–३६ ।

नैकस्मिन्नसम्भवात् ॥ ३३ ॥

एवं चात्माकार्त्स्न्यम् ॥ ३४ ॥

न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

७ पत्यधिकरणम् । सू० ३७–४१ ।

पत्युरसामञ्जस्यात् ॥ ३७ ॥

सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

८ उत्पत्त्यसम्भवाधिकरणम् । सू० ४२–४५ ।

उत्पत्त्यसम्भवात् ॥ ४२ ॥

न च कर्त्तुः करणम् ॥ ४३ ॥

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

विप्रतिषेधाच्च ॥ ४५ ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥



## अथ तृतीयः पादः

१ वियदधिकरणम् । सू० १–७ ।

न वियदश्रुतेः ॥ १ ॥

अस्ति तु ॥ २ ॥

गौण्यसम्भवात् ॥ ३ ॥

शब्दाच्च ॥ ४ ॥

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

२ मातरिश्वाधिकरणम् । सू० ८ ।

एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

३ असम्भवाधिकरणम् । सू० ९ ।

असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

४ तेजोऽधिकरणम् । सू० १० ।

तेजोऽतस्तथा ह्याह ॥ १० ॥

५ अबधिकरणम् । सू० ११ ।

आपः ॥ ११ ॥

६ पृथिव्यधिकाराधिकरणम् । सू० १२ ॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

७ तदभिध्यानाधिकरणम् । सू० १३ ।

तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

८ विपर्ययाधिकरणम् । सू० १४ ।

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

९ अन्तराविज्ञानाधिकरणम् । सू० १५ ।

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

१० चराचरव्यपाश्रयाधिकरणम् । सू० १६ ।

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

११ आत्माधिकरणम् । सू० १७ ।

नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

१२ ज्ञाधिकरणम् । सू० १८ ।

ज्ञोऽत एव ॥ १८ ॥

१३ उत्क्रान्तिगत्यधिकरणम् । सू० १९–३२ ।

उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

स्वात्मना चोत्तरयोः ॥ २० ॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

अविरोधश्चन्दनवत् ॥ २३ ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

गुणाद्वा लोकवत् ॥ २५ ॥
व्यतिरेको गन्धवत् ॥ २६ ॥
तथा च दर्शयति ॥ २७ ॥
पृथगुपदेशात् ॥ २८ ॥
तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ।२९।
यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ।३०।
पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ।३१।
नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतर-
नियमो वाऽन्यथा ॥ ३२ ॥

१४ कर्त्रधिकरणम् । सू० ३३–३९ ।

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥
विहारोपदेशात् ॥ ३४ ॥
उपादानात् ॥ ३५ ॥
व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः३६
उपलब्धिवदनियमः ॥ ३७ ॥
शक्तिविपर्ययात् ॥ ३८ ॥
समाध्यभावाच्च ॥ ३९ ॥

१५ तक्षाधिकरणम् । सू० ४० ।

यथा च तक्षोभयथा ॥ ४० ॥

१६ परायत्ताधिकरणम् । सू० ४१-४२ ।

परात्तु तच्छ्रुतेः ॥ ४१ ॥

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्या-दिभ्यः ॥ ४२ ॥

१७ अंशाधिकरणम् । सू० । ४३-५३ ।

अंशो नानाव्यपदेशादन्यथा चापि दाशकि-तवादित्वमधीयत एके ॥ ४३ ॥

मन्त्रवर्णाच्च ॥ ४४ ॥

अपि च स्मर्यते ॥ ४५ ॥

प्रकाशादिवन्नैवं परः ॥ ४६ ॥

स्मरन्ति च ॥ ४७ ॥

अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादि-वत् ॥ ४८ ॥

असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

आभास एव च ॥ ५० ॥

अदृष्टानियमात् ॥ ५१ ॥

अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीया-ध्यायस्य तृतीयः पादः ॥ ३ ॥

## अथ चतुर्थः पादः

१ प्राणोत्पत्त्यधिकरणम् । सू० १–४ ।

तथा प्राणाः ॥ १ ॥

गौण्यसम्भवात् ॥ २ ॥

तत्प्राक् श्रुतेश्च ॥ ३ ॥

तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

२ सप्तगत्यधिकरणम् । सू० ५–६ ।

सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

३ प्राणाणुत्वाधिकरणम् । सू० ७ ।

अणवश्च ॥ ७ ॥

४ प्राणश्रैष्ठ्याधिकरणम् । सू० ८ ।

श्रेष्ठश्च ॥ ८ ॥

५ वायुक्रियाऽधिकरणम् । सू० ९–१२ ।

न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ११

पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥ १२ ॥

६ श्रेष्ठाणुत्वाधिकरणम् । सू० १३ ।

अणुश्च ॥ १३ ॥

७ ज्योतिराद्यधिकरणम् । सू० १४–१६ ।

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

प्राणवता शब्दात् ॥ १५ ॥

तस्य च नित्यत्वात् ॥ १६ ॥

८ इन्द्रियाऽधिकरणम् । सू० १७-१९ ।

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्१७

भेदश्रुतेः ॥ १८ ॥

वैलक्षण्याच्च ॥ १९ ॥

९ संज्ञामूर्तिक्लृप्त्यधिकरणम् । सू० २०–२२ ।

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्।२०।

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीया-
ध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तो द्वितीयोऽध्यायश्च ।

# अथ तृतीयोऽध्यायः

## प्रथमः पादः

१ तदन्तरप्रतिपत्त्यधिकरणम् । सू० १–७ ।

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

प्राणगतेश्च ॥ ३ ॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ।५।

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः।६।

भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥७॥

२ कृतात्ययाधिकरणम् । सू० ८–११ ।

कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

३ अनिष्टादिकार्यधिकरणम् । सू० १२-२१ ।

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥
संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गति-
दर्शनात् ॥ १३ ॥
स्मरन्ति च ॥ १४ ॥
अपि च सप्त ॥ १५ ॥
तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥
विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥
न तृतीये तथोपलब्धेः ॥ १८ ॥
स्मर्यतेऽपि च लोके ॥ १९ ॥
दर्शनाच्च ॥ २० ॥
तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

४ साभाव्यापत्त्यधिकरणम् । सू० २२ ।

तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

५ नातिचिराधिकरणम् । सू० २३ ।

नातिचिरेण विशेषात् ॥ २३ ॥

६ अन्याधिष्ठिताधिकरणम् । सू० २४-२७ ।

अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ २४ ॥
अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

रेतस्सिग्योगोऽथ ॥ २६ ॥

योनेश्शरीरम् ॥ २७ ॥

इति वैयासिक्यां शारीरकमीमांसायां तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥



## अथ द्वितीयः पादः

१ सन्ध्याधिकरणम् । सू० १–६ ।

सन्ध्ये सृष्टिराह हि ॥ १ ॥

निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

देहयोगाद्वा सोऽपि ॥ ६ ॥

२ तदभावाधिकरणम् । सू० ७–८ ।

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

अतः प्रबोधोऽस्मात् ॥ ८ ॥

३ कर्मानुस्मृतिशब्दविध्यधिकरणम् । सू० ९ ।

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥९॥

४ मुग्धेऽर्धसम्पत्त्यधिकरणम् । सू० १० ।

मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

५ उभयलिङ्गाधिकरणम् । सू० ११–२१ ।

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि॥११॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥१२॥

अपि चैवमेके ॥ १३ ॥

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

आह च तन्मात्रम् ॥ १६ ॥

दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्या-
देवम् ॥ २० ॥

दर्शनाच्च ॥ २१ ॥

६ प्रकृतैतावत्त्वाधिकरणम् । सू० २२–३० ।

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च

भूयः ॥ २२ ॥
तदव्यक्तमाह हि ॥ २३ ॥
अपि च संराधने प्रत्यक्षानुमानाभ्याम् ।२४।
प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्या-
सात् ॥ २५ ॥
अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥
उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥
प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥
पूर्ववद्वा ॥ २९ ॥
प्रतिषेधाच्च ॥ ३० ॥

७ पराधिकरणम् । सू० ३१–३७ ।

परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः३१
सामान्यात्तु ॥ ३२ ॥
बुद्ध्यर्थः पादवत् ॥ ३३ ॥
स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥
उपपत्तेश्च ॥ ३५ ॥
तथाऽन्यप्रतिषेधात् ॥ ३६ ॥
अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

८ फलाधिकरणम् । सू० ३८–४१ ।

फलमत उपपत्तेः ॥ ३८ ॥

श्रुतत्वाच्च ॥ ३९ ॥

धर्मं जैमिनिरत एव ॥ ४० ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

इति वैयासिक्यां शारीरकमीमांसायां तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## अथ तृतीयः पादः

१ सर्ववेदान्तप्रत्ययाधिकरणम् । सू० १–४ ।

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

दर्शयति च ॥ ४ ॥

२ उपसंहाराधिकरणम् । सू० ५ ।

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

३ अन्यथात्वाधिकरणम्। सू० ६–८।

अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥६॥
न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥७॥
संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

४ व्याप्त्यधिकरणम्। सू० ९।

व्याप्तेश्च समञ्जसम् ॥ ९ ॥

५ सर्वाभेदाधिकरणम्। सू० १०।

सर्वाभेदादन्यत्रेमे ॥ १० ॥

६ आनन्दाद्यधिकरणम्। सू० ११–१३।

आनन्दादयः प्रधानस्य ॥ ११ ॥
प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥
इतरे त्वर्थसामान्यात् ॥ १३ ॥

७ आध्यानाधिकरणम्। सू० १४–१५।

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥
आत्मशब्दाच्च ॥ १५ ॥

८ आत्मगृहीत्यधिकरणम्। सू० १६–१७।

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥
अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

९ कार्याख्यानाधिकरणम् । सू० १८ ।

**कार्याख्यानादपूर्वम् ॥ १८ ॥**

१० समानाधिकरणम् । सू० १९ ।

**समान एवं चाभेदात् ॥ १९ ॥**

११ सम्बन्धाधिकरणम् । सू० २०–२२ ।

**सम्बन्धादेवमन्यत्रापि ॥ २० ॥**

**न वा विशेषात् ॥ २१ ॥**

**दर्शयति च ॥ २२ ॥**

१२ सम्भृत्यधिकरणम् । सू० २३ ।

**सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥**

१३ पुरुषविद्याऽधिकरणम् । सू० २४ ।

**पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥२४॥**

१४ वेधाद्यधिकरणम् । सू० २५ ।

**वेधाद्यर्थभेदात् ॥ २५ ॥**

१५ हान्यधिकरणम् । सू० २६ ।

**हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तु-त्युपगानवत्तदुक्तम् ॥ २६ ॥**

१६ साम्परायाधिकरणम् । सू० २७–२८ ।

**साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥२७॥**

**छन्दत उभयाविरोधात् ॥ २८ ॥**

१७ गतेरर्थवत्त्वाधिकरणम् । सू० २९–३० ।

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥२९॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

१८ अनियमाधिकरणम् । सू० ३१ ।

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

१९ यावदधिकाराधिकरणम् । सू० ३२ ।

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

२० अक्षरध्यधिकरणम् । सू० ३३ ।

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

२१ इयदधिकरणम् । सू० ३४ ।

इयदामननात् ॥ ३४ ॥

२२ अन्तरत्वाधिकरणम् । सू० ३५–३६ ।

अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

२३ व्यतिहाराधिकरणम् । सू० ३७ ।

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

२४ सत्याद्यधिकरणम् । सू० ३८ ।

सैव हि सत्यादयः ॥ ३८ ॥

२५ कामाद्यधिकरणम् । सू० ३९ ।

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

२६ आदराधिकरणम् । सू० ४०–४१ ।

आदरादलोपः ॥ ४० ॥

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

२७ तन्निर्धारणाधिकरणम् । सू० ४२ ।

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

२८ प्रदानाधिकरणम् । सू० ४३ ।

प्रदानवदेव तदुक्तम् ॥ ४३ ॥

२९ लिङ्गभूयस्त्वाधिकरणम् । सू० ४४–५२ ।

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥

अतिदेशाच्च ॥ ४६ ॥

विद्यैव तु निर्धारणात् ॥ ४७ ॥
दर्शनाच्च ॥ ४८ ॥
श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥
अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥
न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥
परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

३० ऐकात्म्याधिकरणम् । सू० ५३–५४ ।

एक आत्मनः शरीरे भावात् ॥ ५३ ॥
व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

३१ अङ्गावबद्धाधिकरणम् । सू० ५५–५६ ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥
मन्त्रादिवद्वाविरोधः ॥ ५६ ॥

३२ भूमज्यायस्त्वाधिकरणम् । सू० ५७ ।

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्श-

यति ॥ ५७ ॥

३३ शब्दादिभेदाधिकरणम् । सू० ५८ ।

नाना शब्दादिभेदात् ॥ ५८ ॥

३४ विकल्पाधिकरणम् । सू० ५९ ।

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

३५ काम्याधिकरणम् । सू० ६० ।

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहे-
त्वभावात् ॥ ६० ॥

३६ यथाश्रयभावाधिकरणम् । सू० ६१-६६ ।

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

शिष्टेश्च ॥ ६२ ॥

समाहारात् ॥ ६३ ॥

गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

दर्शनाच्च ॥ ६६ ॥

इति वैयासिक्यां शारीरकमीमांसायां तृतीया-
ध्यायस्य तृतीयः पादः ॥ ३ ॥



## अथ चतुर्थः पादः

१ पुरुषार्थाधिकरणम् । सू० १–१७ ।

पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ १ ॥

शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

आचारदर्शनात् ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥

समन्वारम्भणात् ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥

नियमाच्च ॥ ७ ॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥८॥

तुल्यन्तु दर्शनम् ॥ ९ ॥

असार्वत्रिकी ॥ १० ॥

विभागः शतवत् ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥

नाविशेषात् ॥ १३ ॥

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

कामकारेण चैके ॥ १५ ॥

उपमर्दं च ॥ १६ ॥

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

२ परामर्शाधिकरणम् । सू० १८–२० ।

परामर्शं जैमिनिरचोदना चापवदति हि॥१८॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

विधिर्वा धारणवत् ॥ २० ॥

३ स्तुतिमात्राधिकरणम् । सू० २१–२२ ।

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

भावशब्दाच्च ॥ २२ ॥

४ पारिप्लवाधिकरणम् । सू० २३–२४ ।

पारिप्लवार्था इति चेन्न विशेषितत्वात् ।२३।

तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

५ अग्नीन्धनाद्यधिकरणम् । सू० २५ ।

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

६ सर्वापेक्षाधिकरणम् । सू० २६–२७ ।

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

७ सर्वान्नानुमत्यधिकरणम् । सू० २८–३१ ।

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥२८॥
अबाधाच्च ॥ २९ ॥
अपि च स्मर्यते ॥ ३० ॥
शब्दश्चातोऽकामकारे ॥ ३१ ॥

८ आश्रमकर्माधिकरणम् । सू० ३२–३५ ।

विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥
सहकारित्वेन च ॥ ३३ ॥
सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥
अनभिभवं च दर्शयति ॥ ३५ ॥

९ विधुराधिकरणम् । सू० ३६–३९ ।

अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥
अपि च स्मर्यते ॥ ३७ ॥
विशेषानुग्रहश्च ॥ ३८ ॥
अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

१० तद्भूताधिकरणम् । सू० ४० ।

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-
द्रूपाभावेभ्यः ॥ ४० ॥

११ अधिकाराधिकरणम्। सू० ४१–४२।

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥४२॥

१२ बहिरधिकरणम्। सू० ४३।

बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥

१३ स्वाम्यधिकरणम्। सू० ४४–४६।

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

श्रुतेश्च ॥ ४६ ॥

१४ सहकार्यन्तरविध्यधिकरणम्। सू० ४७–४९।

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

१५ अनाविष्काराधिकरणम्। सू० ५०।

अनाविष्कुर्वन्नन्वयात् ॥ ॥ ५० ॥

१६ ऐहिकाधिकरणम्। सू० ५१।

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥५१॥

१७ मुक्तिफलाधिकरणम् । सू० ५२ ।

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥**

इति वैयासिक्यां शारीरकमीमांसायां तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तस्तृतीयोऽध्यायश्च ।



# अथ चतुर्थोऽध्यायः

## प्रथमः पादः

१ आवृत्त्यधिकरणम् । सू० १–२ ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

लिङ्गाच्च ॥ २ ॥

२ आत्मत्वोपासनाधिकरणम् । सू० ३ ।

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

३ प्रतीकाधिकरणम् । सू० ४ ।

न प्रतीके न हि सः ॥ ४ ॥

४ ब्रह्मदृष्ट्यधिकरणम् । सू० ५ ।

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

५ आदित्यादिमत्यधिकरणम् । सू० ६ ।

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

६ आसीनाधिकरणम् । सू० ७–१० ।

आसीनः सम्भवात् ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥

अचलत्वञ्चापेक्ष्य ॥ ९ ॥

स्मरन्ति च ॥ १० ॥

७ एकाग्रताऽधिकरणम् । सू० ११ ।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

८ आप्रायणाधिकरणम् । सू० १२ ।

आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

९ तदधिगमाधिकरणम् । सू० १३ ।

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

१० इतरासंश्लेषाधिकरणम् । सू० १४ ।

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

११ अनारब्धाधिकरणम् । सू० १५ ।

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

१२ अग्निहोत्राद्यधिकरणम् । सू० १६–१७ ।

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्॥१६॥

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

१३ विद्याज्ञानसाधनाधिकरणम् । सू० १८ ।

यदेव विद्ययेति हि ॥ १८ ॥

१४ इतरक्षपणाधिकरणम् । सू० १९ ।

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

## अथ द्वितीयः पादः

१ वागधिकरणम् । सू० १-२ ।

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अत एव च सर्वाण्यनु ॥ २ ॥

२ मनोऽधिकरणम् । सू० ३ ।

तन्मनः प्राण उत्तरात् ॥ ३ ॥

३ अध्यक्षाधिकरणम् । सू० ४-६ ।

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

भूतेषु तच्छ्रुतेः ॥ ५ ॥

नैकस्मिन् दर्शयतो हि ॥ ६ ॥

४ आसृत्युपक्रमाधिकरणम् । सू० ७ ।

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ७

५ संसारव्यपदेशाधिकरणम् । सू० ८-११ ।

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

नोपमर्देनातः ॥ १० ॥

अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

६ प्रतिषेधाधिकरणम् । सू० १२-१४ ।

प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

स्पष्टो ह्येकेषाम् ॥ १३ ॥

स्मर्यते च ॥ १४ ॥

७ वागादिलयाधिकरणम् । सू० १५ ।

तानि परे तथा ह्याह ॥ १५ ॥

८ अविभागाधिकरणम् । सू० १६ ।

अविभागो वचनात् ॥ १६ ॥

९ तदोकोऽधिकरणम् । सू० १७ ।

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

१० रश्म्यधिकरणम् । सू० १८–१९ ।

रश्म्यनुसारी ॥ १८ ॥

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥

११ दक्षिणायनाधिकरणम् । सू० २०–२१ ।

अतश्चायनेऽपि हि दक्षिणे ॥ २० ॥

योगिनः प्रति च स्मर्यते स्मार्ते चैते॥ २१ ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥



## अथ तृतीयः पादः

१ अर्चिराद्यधिकरणम् । सू० १ ।

अर्चिरादिना तत्प्रथितेः ॥ १ ॥

२ वाय्वधिकरणम् । सू० २ ।

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

३ तडिदधिकरणम् । सू० ३ ।

तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

४ आतिवाहिकाधिकरणम् । सू० ४–६ ।

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

५ कार्याधिकरणम् । सू० ७-१४ ।

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

विशेषितत्वाच्च ॥ ८ ॥

सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधा-
नात् ॥ १० ॥

स्मृतेश्च ॥ ११ ॥

परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

दर्शनाच्च ॥ १३ ॥

न च काय प्रतिपत्त्यभिसन्धिः ॥ १४ ॥

६ अप्रतीकालम्बनाधिकरणम् । सू० १५–१६ ।

अप्रतीकालम्बनान्नयतीति बादरायण उभयथादोषात्तत्क्रतुश्च ॥ १५ ॥

विशेषञ्च दर्शयति ॥ १६ ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## अथ चतुर्थः पादः

१ सम्पद्याविर्भावाधिकरणम् । सू० १–३ ।

सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

मुक्तः प्रतिज्ञानात् ॥ २ ॥

आत्मा प्रकरणात् ॥ ३ ॥

२ अविभागेन दृष्टत्वाधिकरणम् । सू० ४ ।

अविभागेन दृष्टत्वात् ॥ ४ ॥

३ ब्राह्माधिकरणम् । सू० ५–७ ।

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

४ संकल्पाधिकरणम् । सू० ८–९ ।

सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

अत एव चानन्याधिपतिः ॥ ९ ॥

५ अभावाधिकरणम् । सू० १०–१४ ।

अभावं बादरिराह ह्येवम् ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥१२॥

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥

६ प्रदीपाधिकरणम् । सू० १५–१६ ।

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

७ जगद्व्यापाराधिकरणम् । सू० १७–२२ ।

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डल-
स्थोक्तेः ॥ १८ ॥
विकारावर्ति च तथा हि स्थितिमाह ॥१९॥
दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥
भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥
अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्था-
ध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्चतुर्थोऽध्यायः ॥ ४ ॥



समाप्तश्चेदं शारीरकमीमांसादर्शनम् ॥

॥ हरिः ॐ तत्सत् ॥



## संक्षिप्त-सूचीपत्रम् ।

१ ब्रह्मसूत्रशाङ्करभाष्यम् । चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्या रत्नप्रभासमन्वितम् ।
,, द्वितीयाध्यायस्य द्वितीयपादान्तो प्रथमो भागः । २॥)
२ ,, द्वितीयाध्यायस्य तृतीयपादमारभ्य समाप्तिपर्यन्तम् । द्वितीयो भागः । २॥)
३ ,, श्रीमद्विज्ञानभिक्षुविरचितं विज्ञानामृताख्य व्याख्यानम् । ९)
४ ,, श्रीभास्कराचार्यविरचितभाष्यसहितं ४॥)
५ ,, श्रीमदणुभाष्यम् । श्रीवल्लभाचार्यविरचितम् । प्रकाशव्याख्यासमेतम् । २२॥)
६ ,, निम्बार्कभाष्यम् । वेदान्तपारिजात-वेदान्तकौस्तुभ-भाष्यद्वययुता । ३)
७ सिद्धान्तबिन्दुः । श्रीमधुसुदनसरस्वती विरचितः । श्रीगौडब्रह्मानन्द-विरचित न्यायरत्नावली नारायणतीर्थ विरचित लघुव्याख्या टिप्पणी सहितम् । ४)
८ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थ-बोधिनी टीका सहितम् । ८)
९ ,, मधुसूदनसरस्वतीविरचितटीकासहितं ८)

१० **वेदान्तपरिभाषा।** अर्थदीपिकाटीकाबृहट्टिप्पण्या समेता। १।)

११ **खण्डनखण्डखाद्यम्।** विद्यासागरीटीका सहितम् १४)

१२ **हरिलीलामृतम्।** श्रीवोपदेवप्रणीतम्। मधुसूदनसरस्वती प्रणीत टीका सहितम्। तत्प्रणीत परमहंसप्रियाख्यव्याख्यायुतं श्रीमद्भागवतस्याऽऽद्यं पद्यं च। १॥)

१३ **पञ्चीकरणम्।** वार्तिकाभरणालङ्कृत वार्तिकटीकया तत्त्वचन्द्रिकासमवेत विवरणेन च समन्वितम्। ॥)

१४ **श्रीमत्सनत्सुजातीयम्।** शाङ्करभाष्य–नीलकण्ठी व्याख्या सहितम्। १।)

१५ **जीवनमुक्तिविवेकः।** विद्यारण्य स्वामि विरचितः भाषानुवादसहितः। २)

१६ **बृहदारण्यकवार्त्तिकसारः।** विद्यारण्यस्वामि विरचितः। महेश्वरतीर्थकृतया लघुसंग्रहाख्यव्याख्या सहितः, तथा उत्तमश्लोकयति विरचितं वेदान्तसू लघुवार्त्तिकं श्लोकबद्धम्। १५)

